# संस्कृत-वार्ताः

**दिनाङ्कः 10-12-2020**

**प्रातः - 06: 55**

**मुख्य-वार्ताः**

- **केन्द्रीय मन्त्रि मण्डलेन आत्मनिर्भर रोजगार योजना अनुमता , सार्ध-अष्टपञ्चशत् लक्ष कार्मिकेभ्यः अस्य लाभो भविता। वर्षद्वयाय प्रशासनं साहाय्यपुटकम् अवाप्स्यन्ति इति।**
  - **केन्द्रीय कृषिमन्त्री नरेन्द्रसिंहतोमरः पुनरेकवारं कृषकसङ्घटनानि समाश्वासयत् यत् कृषकेभ्यो न्यूनतमसमर्थनमूल्यं यथावस्थमेव प्रवर्तिता। शाकान्नविपण्यश्चापि नैव पिधास्यन्ते इति।**
  - **प्रधानमन्त्री नरेन्द्रमोदी अद्य संसदः नूतनभवनस्य आधारशिलां स्थापयिष्यते इति। स्वातन्त्रपर्वणः पञ्चसप्ततितमीं वर्षपूर्तिमालक्ष्य निर्मितो भविता इदं नूतनं संसद्भवनम् इति।**
  - **केन्द्रशासिते जम्मूकाश्मीरे अद्य समायोक्ष्यमाणाय जनपद् विकास निर्वाचनाय सर्वाः सज्जाः सन्ति सम्पूरिताः। निर्वाचनस्य पञ्चमचरणाय अस्मै सुरक्षाव्यवस्थाः सुदृढाः सन्ति इति।**
  - **कोविड 19 इति वैश्विक संङ्क्रमण प्रतिरोधी संघर्षे भारतं अनारतं साफल्यम् अधिगच्छति। स्वास्थ्यलाभे प्रतिशतं षड् षड् दशमलवोत्तर चतुर्नवतिमितः परिष्कारः।**

**कोविड ओपनिंग**

**कोरोणामहामार्याः विरुद्धं देशः ऐक्यभावनया युध्यते। भवन्तोऽपि अस्माभिः सह सुरक्षायाः उपायत्रयस्य संकल्पं स्वीकुर्वन्तु -**

**मुखावरंक सन्धारयन्तु**

**सामाजिकदौर्यं परिपालयन्तु,**

**पाणिपादं च यथासमयं प्रक्षालयन्तु।**

कैबिनेट-फैसला

केन्द्रीय मन्त्रिमण्डलेन प्रवर्तमान वित्तवर्षे "आत्मनिर्भर-भारत-रोजगार-योजना" इत्याख्या वृत्यवसरपरा योजना अनुमता। अस्यै योजनायै दशाधिक-अष्टशतोत्तर-द्वाविंशति सहस्र कोटि रूप्यकाणां शशिः  वर्तमान कालात् अस्य वर्षस्य त्रयोविंशति वर्षं यावत् अनुमतः। नवदिल्ल्यां केन्द्रीय श्रममन्त्रिणा संतोष गंगवारो अवोचत् यत् अनया योजनया सार्धं अष्ट-पञ्चाशत् कार्मिकाः लाभं अवाप्स्यन्ति इति। तेन प्रोक्तं यत् प्रशासनं अस्य वर्षस्य अक्टूबर मासादारभ्य आगामि वर्षस्य जून मासं यावत् वृत्तिप्रदातृभ्यः वर्षद्वयाय साहाय्यं उपकल्पयिष्यते इति। केन्द्रीय मन्त्रिमण्डलेन सार्वजनिक वाई-फाई इति अन्तर्तालीय सौविध्यार्यं अपि अनुमतम्। केन्द्रीय सूचना प्रौद्योगिकी-मन्त्री रविशंकर प्रसादो स्पष्टमकरोत् यत् सार्वजिनक-रूपेण अन्तर्जालीय सौविध्यपरा इयं योजना "पी.□म. वाणी" इति नाम्ना अवज्ञास्यते इति।

मन्त्रमण्डलेन पूर्वोत्तर-भारतस्य विकासाय अपि विस्तृत-दूर-संचार-विकास-योजनान्तर्गतं अरूणाचल-प्रदेश-असम राज्ययोः जनपद्द्वयेषु दूरभाष-सौविध्यार्थमपि सार्वभौमिक सेवा दायित्व योजनायै अपि अनुमतिः प्रदत्ता।

तोमर

केन्द्रीय-कृषि मन्त्री नरेन्द्र सिंह तोमरः पुनरेकवारं कृषक-संघटनानि  समाश्वासयत् यत् न्यूनतम समर्थन मूल्यं यथावस्थमेव स्यास्यते अपि च □पी. □म. सी. इति शाकान्नविपण्यश्चापि नैव अपसारयिष्यन्ते इति। तेन स्पष्टीकृतं यत् कृषि सहकारी विपणन समित्या द्वारा संचाल्यमाणाः कृषि विपण्यः नैव पिधास्यन्ते। □कस्मिन् ट्वीट सन्देशे केन्द्रीय कृषि मन्त्री अवोचत् यत् न खलु कस्यापि कृषीवलस्य भूमेः अधिग्रहणं क्रियते नैव च कृषीवलानां भूमिषु परिवर्तनं विधास्यते इति। तेन □तदिप स्पष्टीकृतं यत् सम्पूर्ण-देयात् पूवं अनुबन्धोऽपि समाप्तुं नैव शक्यते इति।

जावड़ेकर

केन्द्रीय सूचना प्रसारण मन्त्री प्रकाशः जावड़ेकर स्पष्टमकरोत् यत् कृषक्-विषय मालस्य मोदी प्रशासनं सर्वतो द्वशा अवधानपरं वर्तते। अपि च वार्तायाः नेके क्रमाः अपि समनुष्टिताः प्रशासेन। नवदिल्ल्यां  वार्ताहर-सम्मेलने भाष्याणो जावड़ेकरः प्रत्यपादयत् यत् कृषकैः साकं □तद्विषये विचार-विनिमयो विधीयते, शीध्रमेव इमाः वार्ताः सम्पत्स्यते इति।

प्रधानमन्त्री – संसद

प्रधानमन्त्री नरेन्द्रमोदी अद्य संसद मार्गस्थितस्य  नूतन-संसद् भवनस्य शिलान्यासं विधास्यते। अभिनव-संसद्-भवनमिदं भारतस्य आधारभूत-विचारणां प्रतीकात्मकं भविता।

अवधेयास्पदं वर्तते यत् स्वातन्त्र्य–प्राप्तिरनन्तरं प्रथमोऽयं अवसरः यदा संसद् भवनस्य निर्माण-कार्यं विधीयते। नूतन संसद् भवनमिदं अस्य शताब्दस्य द्वाविंश वर्ष यावत् सज्जीभूय स्वातन्त्र्य-प्राप्तेः पञ्चसप्ततितमीं वर्षपूर्त्यवसरे अभिनव भारतस्य आवश्यकताः आशाकांक्षानुरूपं भविता ।

<u>कोविड</u>

कोविड-19 इति वैश्विक-संक्रमण विरूध्य कोरोना-संक्रमण प्रतिरोधी वीराणां प्रशासनस्य च प्रमासैः भारतं कोविड-19 इति वैश्विक संक्रमण विरूध्य साकल्यं अधिप्राप्नोति । अनारतं स्वास्थ्यलाभः प्रतिशतं षड् षड् दशमलोत्तर चतुर्नवति मितः संवृत्तः। त्रिनवतिलक्षाधिकाः जनाः स्वस्थीभूय सकुशलं गृहं उपेताः।